# ऋग्विलङ्घ्यलक्षणम्

शुद्धस्फतिकसंकाशं पुण्डरीकनिवासिनम्
दातारं सर्वविद्यानां हयग्रीवमुपास्महे १
यज्ञनारायणात्सूरेरुत्पन्नः सोमयाजिनः
नागदेवो वदिष्यामि विलङ्घ्यानि पदान्यहम् २
ऋकारे पर आकारः परयोरोदुवर्णयोः
ओदौतौ स्वर एवैता सन्धिं ना संहितागमे ३
वर्णक्रमात् गृहिष्यन्ते तान्यन्यूनाधिकं मया
सव्याख्यन्यव्ययेव्येपि परं सानावितिष्यते ४
इङ्ग्यं पृथक्पदं चात्र निम्--- दस्य च ।
सर्त्तवाजौ च वासौ च सत्तवै वैपदे क्रमात् ५
इति सर्वविलङ्घ्यपरिभाषा समाप्ता ॥--॥
अथानीकेऽध्वरेऽवद्ये नेङ्ग्यान्तान्यनसात्रये
अर्थयासेऽन्तरिक्षेऽस्मा अग्नेऽह्वेऽग्नावभिष्टये १
अपत्या अवसेऽभीके विशेऽस्या अर्चतेऽज्ञते
अग्रेऽयन्तेऽङ्गिरस्वन्तावपत्येऽभ्रेऽज्यसेऽक्षिते २
अर्चेऽत्रेऽवरेऽश्विनावस्यते मेऽह्नेऽसावर्णवे तथा
परीद्गर्भमिमेऽन्वन्ये जवाः पूर्वं विनावरे ३
अन्तःपूर्वमपारे ते पूर्वं हित्वा-से भवेत्
आस्त आघृण आप्ये च व्यास आनश आसते ४
आयते स्यादिमेचेष्य इन्दोचेन्द्रोत इष्टये
दधाना ओजसाथेन्द्रे तमं पूर्वमिषे भवेत् ५
य इद्ध ईयते चेश ईध ईळत ईरते
ईष्ट ईळामहा ईट्ट ईरिर ईवते ६
ईयसे चेशिषे चेङ्ख ईळ ईमह उच्यते
उपाक उक्थे नबृहत्पूर्वमुष्टा उभावपि ७
उषसौ भूतयोयन्तिनपूर्वश्चेद्विनोतये

ऊर्मौ स्यादृञ्जसे चर्त ऋृत्या आङ्परमेतवे ८
एतवै श्रवएषे च पुरएतैत एरिरे
घृतमेकेऽप्योहते स्यादोतवा ओदने कृपे ९
कस्मै कृणवे कृषे च कौ कृणवन्ते करामहे
केवले कलशे कक्षे कृणुते केतुना क्रतो १०
विवित्से मातरं पान्ति -र्वमं विपरं च के
दीदेथकणवे वेमनः कोशे कर्णेऽपि पूर्वकम् ११
कृत्वने च क्षितौ क्षत्रौ क्षीयन्ते क्षेम इत्यपि
क्षोदन्ते स्यात् क्षिते स्वर्गे गभीरे गन्तवै गवे १२
गम्भीरया गृणीषेऽपि गृणीते च गृहे गणे
घृते घ्ने घृष्वये घर्मे घ्रंसे चक्रे च चक्रमे १३
चित्तये चर्कृषे चष्टे चक्राणौ चयते तथा
चक्षसे स्यादनिङ्ग्यान्तं चिकित्रे चयसे तथा १४
विचक्षे चितयन्ते न चेदायन्नायवः परम्
चाकलृप्रे चेतसा जोषे जूर्यन्त्यै जठरे जिते १५
जिघ्नन्ते जज्ञिषे जिग्ये जभ्रे जज्ञे च जीवसे
तुविजातौ जिहीतेऽस्मिन् जायमाने च जोषसौ १६
सुजिह्वौ जायते जुह्वे जनमाने च जागृवे
जिहीळे जिहते जेषे जगृभ्रे जभ्रिरे भवेत् १७
जरित्रे जरते तस्मै तिरन्ते तातये त्विषे
तिष्ठन्ते तुरयन्ते ते त्रायध्वे तित्विषे तने १८
गातुन्तन्वे तथा ताते तरध्यै तनुते तरा
त्यस्यै तस्थे तरुक्षे त्ये त्रित आप्त्ये परं भवेत् १९
तरुषन्ते तृपौ त्वष्टा त्वे नाहपरमुत्तरे
क्षितो दोषाब्रुवे पूर्वन्तौ तूर्ये तनये दमे २०
ददृश्रे दातवै दध्रे दुरोणे दावने दुहे

दिधिषन्ते दिदृक्षन्त इन्दोद्युम्ने दिवेदिवे २१
दुहते दुह्रते दुह्रे सुदासे च दधन्विरे
दुर्योणे देवता देये द्वौ सूर्योऽरूक्षितन्दृशे २२
दाउतत्मन्परन्दीने वज्रं पूर्वं तु दक्षिणे
दीवे ददृक्षे देदिक्षे देदिष्टे दाशुषे तूषसः परम् २३
दधसे ददृशे च स्याद्दधे तु न विपूर्वकम्
दूरे चनिष्टं देवौ च दानवे स्यादुताङ्परम् २४
धरुणे धारयन्ते तुनान्तिपूर्वन्धने धिषे
धाम्ने च धायसे धत्ते त्वस्मे पूर्वं विसर्जयेत् २५
नुनुद्रे तनये नित्ये नेमे त्वनिति पूर्वकम्
नशामहै निरेके स्यात्स्वर्णरे नयसेऽपि च २६
नक्षन्तेनाभिपूर्वञ्च निजे निम्ने च पत्यते
पवित्रे पप्रथे पित्रे प्रचक्षे पातवै पते २७
पराके पिपिषे पत्ये पवन्ते पेदवे परा
पक्वे पृणध्यै पस्पृध्रे पुनीते पिन्वसे प्रिया २८
पवसे पवते पित्वे शकपूते च पीतये
प्सरसे पापजे पादौ सुपुत्रे पितरौ पदे २९
पिबन्तावबसे पूर्वौ वृजने पृक्ष इष्यते
छर्दिर्जगत्पौ रजसः पारे पन्ये तुनाङ्परम् ३०
अवोचं प्रपृथिव्यै स्यात्पुनते प्रवणे पुरा
पोषे पूर्वे तु न भवेद्यश्च राजनि पूर्वकम् ३१
पिप्ये बुभुज्रिरे बभो बाधध्वे बीरिटे ब्रुवे
ऋतस्य तपुषो बुध्ने ब्रुवते च बृहस्पते ३२
बृहत्पूर्वञ्च बृहते भर्तवै भोगये भरे
भ्रियन्ते भयते भूत इव भ्राजन्त इद् भुजे ३३
भृत्यै भयाते भरते स्याद्रथेषु भगे मन्तवै मरै ३४

कुवित्तन्मा च मन्दध्वे द्रुह्वणे मनुषे ममे
मध्यन्दिने मिमे मन्ये मार्डीके च मघत्तये ३५
मह्वा नस्सारथिस्ताहिर्मह्यै मर्जयन्ते त्विषीमते
आशु इन्द्रे परं मादे मनीषा मधुनापि च ३६
पित्वासोमस्य यत्स्तोम्यमन्धसस्ता हिते मदे
सुम्नायदायिस्तोमोनऋजीषिन्राधसे महे ३७
ते सोमं महते मित्रावरुणौ मातरिश्वने
मांश्चत्वे मन्यवे मध्ये मिमीते मानुषे च मे ३८
मीळ्हे ह महीयै मंसन्ते समर्ये मीळ्हुषे यमे
यस्मै यजाते युज्यन्ते युयुज्रे यतते यथा ३९
यजातै येमिरे योगे यजन्ते यवसे यसे
येतिरे स्याद्यमितवै यातयै च यजामहे ४०
अस्मिन् यज्ञे नयज्ञे च त्वं यून उपयै तथा
धातमोऽमीपदं पक्वं मरुतोभिः करिष्यति ४१
पूर्वासः स्याम जन्मानः श्रुतोऽधान्नप्रचेतसः
पितरोऽभूतनगुहो बर्हसोवतितात्परम् ४२
पन्थिनोऽभ्यन्तरिक्षेभ्य एतत्पूर्वं य इष्यते
प्रऋभुभ्यः प्रयेऽयंसये यज्ञेन प्रयुञ्जती ४३
अयं वामग्निमेतेषु चाध्यायेषु विनर्भवः
कक्षीवन्तं स्कुतः पूर्वं रोचतेरन्त इष्यते ४४
रोचसे राधसे तु स्यादाववर्तत्परं रणे
रमन्ते रंहते राजौ मा पूर्वं रक्षसे भवेत् ४५
ररे रश्मे वसुहरी उरौ कं वाजिनं रथे
रंहयन्ते ररप्शे च ररते रुरुचेऽपि च ४६
रेतसे स्याच्च राये तु विश्वः क्षयत्स इष्टये
कृणुध्वं पवते द्युक्षा कृधीनोव दिवेदिवे ४७

अन्विञ्चे तस्य पूर्वं स्याद्रभे रिरिच इष्यते
रिरिक्षे रेभिरे वन्दे विश्वस्मै विष्णवे वसो ४८
वने ववक्षे ववृधे वन्दध्यै ववृते वशा
वरन्ते वपते वस्ते ववृधध्यै वृणीमहे ४९
विदुषे विदथे वर्णे विविप्रे वर्धसे व्रजे
विविद्रे वायवे विव्ये वर्द्धासे वृणते तथा ५०
वराते वर्तवे वीर्ये वहन्ते वक्षणा वाते
वावश्रे ववृषे वर्ते परिवारे तमो विदे ५१
वर्तन्ते विविदे वोचे वृषणौ वमत इत्परम्
तावावृधानौ वन्तौ वै वृष्णे नोघ्न उदाङ्परम् ५२
अस्य यस्य व्रतेऽविष्टं वाजे च वर आपरम्
वायोचिद्वचसे वामे वर्गे चर्तपरं वृधा ५३
वृञ्जे विश्वे पतिं मर्तो ध्रियते पूर्वकं नहि
विश्वानृतानिपूर्वं स्याद्वहध्वे वज्रिणेऽपि च ५४
वीतये श्रवसे शेषे शस्यमाने च शम्भुवा
शयते शस्तये शुक्र ऊधन्यायोः परं श्रिये ५५
आशंसे शवसा शुभ्रे शेपे श्रुत्यै च शुष्मिणे
श्रीणीषे शरणे शृणवे शुष्मा शम्या अपीष्यते ५६
शोचे शुष्णे स्रवितवै स्तोतवे सदने स्तुषे
स्वदन्ते सातये सिञ्चे स्तवध्यै सवने सने ५७
स्थूणे संवत्सरे स्योने सचन्ते सृज्यतेऽवसै
सहते सरमे सुन्वे सूदयन्ते च सित्तये ५८
सेचते सुरभौ सेके सन्तुसर्वे च सन्यसे
सुम्ने भिः स्तुवते सह्ये सुन्वते चपूर्वं च न ५९
सिञ्चसे च समुद्रे स्यादेकमाप उदाङ्परम्
स्वस्तयेऽघ्नरस्सूर्ये सरयन्ते सहस्वते ६०

सर्तवै समाने न भवेदिन्द्रपरं स्वरे
समस्मै संसधोपस्थे सश्चिरे सिस्रते भवेत् ६१
स्तवै सस्रे सख्ये सूते सातौ साधे च संस्कृता
सोमे यज्ञरितस्सोमे तन्व इन्द्र हि पूर्वकम् ६२
उदिते परतस्सूर इता पूर्वञ्च सुस्वये
सखासूनो सवित्रेऽग्नावोक्यन्त्वारारणस्सुते ६३
इत्परञ्च स्तवन्ते स्वेयस्ते पूर्वं विना हणौ
हवन्ते हन्तवै हत्ये हूमहे हवते हुवे ६४
ह्वयन्ते हूयते ह्वारे हृदये च हवामहे
हर्यतेऽशीतपूर्वं न हूयन्ते हरसे हरे ६५
हिता होता हते हस्ता हरन्ते हुवमे हृदे
हस्ते हुवध्यै होतारौ हूताविवहवे भवेत् ६६
इदं लक्षणरत्नं तु बुद्ध्यादिगुणसागरम् ।
नागदेवात्समुत्पन्नं हृदये धार्यतां बुधैः ६७
एतद्विलङ्घ्यमादृत्य पण्डितैः परिगृह्यताम् ।
प्रोक्तं यथा तथा वापि प्रीत्या बालकळोक्तिवत् ६८
मयोक्तान्यृग्विलङ्घ्यानि वर्णक्रमत एव तु
विलङ्घ्यलक्षणश्लोका अष्टषष्टिरुदीरिताः
इति सर्वविलङ्घ्यः समाप्तम्

Reference:
*Ṛg Vilaṅghya Lakṣaṇam,* VB 266, Adyar Library, Telugu script on palm leaves, 6 folios.